चन्द्रसूर्य्यग्रहे पीत पलमेकं पयोऽन्वितम् ।
वचायास्तत्क्षणं कुर्य्यात् महाप्रज्ञान्वितं नरम् ॥
भूनिम्बनिम्बत्रिफलापर्पटैश्च शृत जलम् ।
पटोलीमुस्तकाभ्याञ्च वासकेन च नाशयेत् ।
विस्फोटकानि व्यक्तानि नात्र कार्य्या विचारणा ।
कतकस्य फल शङ्ख सैन्धवं त्र्यूषणा वचा ॥
फेनो रसाञ्जन क्षौद्र विडङ्गानि मन शिला ।
एषा वर्त्तिर्हन्ति काच तिमिरं पटल तथा ॥
प्रस्थे द्वे गण्डमालाना क्वाथयेद्द्रोणमम्भसाम् ।
चतुर्भागावशेषेण तैलप्रस्थ विपाचयेत् ॥
काञ्जिकस्याढकं दत्त्वा पिष्टान्येतानि दापयेत् ।
पुनर्णवा गोक्षुरक सैन्धवं त्र्यूषणं वचा ॥
सरल सुरदारुञ्च मञ्जिष्ठा कण्टकारिका ।
नस्यपानाद्धरत्येव कर्णशूल हनुग्रहम् ॥
बाधिर्य्य सर्व्वरोगांश्च अभ्यङ्गाच्च महेश्वर ।॥
पलद्वयं सैन्धवञ्च शुण्ठी चित्रकपञ्चकम् ।
पञ्चप्रस्थ त्वारनाल तैलप्रस्थ पचेत्तत ।
शहस्तद्धस्तरक्षीहसर्व्ववातविकारनुत् ॥
उदुम्बरं वटश्चैव जम्बुद्वयमथार्ज्जुनम् ।
पिप्पलश्च कदम्बश्च पलाश लोध्रतिन्दुकम् ॥
मधुकमाम्रसर्ज्जञ्च वदरं पद्मकेशरम् ।
शिरीषवीज कतकमेतत्क्वाथेन साधितम् ।
तैलं हन्ति व्रणाक्षेपाञ्चिरकालभवानपि”॥
इति गारुडे १९८ अध्याय ॥ * ॥

हरिरुवाच ।
“पाठा द्वे रजनी कुष्ठमश्वगन्धाजमोदकम् ।
वचा त्रिकटुकञ्चैव लवण चूर्णमुत्तमम् ॥
ब्राह्मीरसे भावितञ्च सर्पिर्मधुसमन्वितम् ।
सप्ताह भक्षित कुर्य्यान्मदैश्वर्य्यं मति पराम् ॥
सिद्धार्थकवचाहिङ्गुकरञ्ज देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता शिरीषो रजनीद्वयम् ॥
प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणावघर्षितम् ।
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तन तथा ॥
अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् ।
भूतेभ्यश्च भय हन्ति राजद्वारे च शासनम् ॥
निम्बकुष्ठे हरिद्रे द्वे शिग्रु सर्षपजस्तरु ।
देवदारु पटोलञ्च धान्य तक्रेण घर्षितम् ॥
देह तलाक्तगात्र वै अनेनोद्वर्त्तयेत्तत ।
पामाः कुष्ठानि नश्येयु कण्डु पिटकसक्थिकौम्॥
सामुद्र सैन्धवं क्षारो राजिका लवण विड्म् ।
कटुलोहरज कीट त्रिवृत् सूरणकं समम् ॥
दधिगोमूत्रपयसा मन्दपावकपाचितम् ।
एतच्चाग्निबल चूर्ण पिबेदुष्णेन वारिणा ॥
जीर्णे जीर्णे च भुञ्जीत मासादिष्टतभोजनम् ।
नाभिशूल मूत्रशूल गुल्मप्लीहभवञ्च यत् ।
सर्व्वशूलहर चूर्ण जठरानलदीपनम् ।
परिणामसमुत्थस्य शूलस्य च हितं परम् ॥
अभयामलक द्राक्षा पिप्पली कण्टकारिका ।
शृङ्गी पुनर्णवा शुण्ठी जम्बा क्वाथ निहन्ति वै ॥
अभयामलक द्राक्षा पाठा चैव विभीतकम् ।
शर्करा च समञ्चैव जयं ज्वरहर भवेत् ॥
त्रिफला वदर द्राक्षा पिप्पली च विरेचकृत् ।
हरीतकी सोमराजी लवणञ्च विरेचकृत् ॥
कूर्म्ममत्स्याखुमहिषगोशृगालाश्च वानरा ।
विडालवर्हिकाकाश्च वराहोलूककुक्कुटा ॥
हंस एषाञ्च विण्मूत्र मास वा रोमशोणितम् ।
धूप दद्यात् ज्वरार्त्तेभ्य उन्मत्तेभ्यश्च शान्तये ॥
अपस्माराभिभूतेभ्यो ग्रहार्त्तेभ्यश्च शान्तये ।
एतान्यौषधजातानि कथितानि महेश्वर ।॥
निहन्ति यानि रोगाणि वृत्रमिन्द्राशनिर्यथा ।
औषधे भगवान् विष्णु स्मृतोऽसौ रोगनुद्भवेत् ॥
ध्यातोऽर्च्चित स्तुतो वापि नात्र कार्य्या विचारणा”॥
इति गारुडे १९९ अध्याय ॥
(विष्णु । यथा महाभारते।विष्णो सहस्रनाम-कीर्त्तने।१३। १४९। ४४।
“अमृताशूद्भवो भानु शशविन्दु सुरेश्वर ।
औषध जगत सेतु सत्यधर्म्म पराक्रम” ॥)

औषर, क्ली, (उषरे भव । उषर+अण् ।) पाशव-लवणम् । अयस्कान्तभेद । इति राजनिर्घण्ट ॥ (पाशवलवणशब्देऽस्य गुणादिक ज्ञेयम् ॥)

औषरक, क्ली, ( औषर+स्वार्थे कन् । ) मृत्तिका-लवणम् । खारी लूण इति भाषा । तत्पर्य्याय । सार्व्वगुणम् २ सर्व्वसर्गलवणम् ३ उषरकम् ४ साम्बरम् ५ वङ्गलवणम् ६ मेलकलवणम् ७ मिश्रम् ८। अस्य गुणा । कटुत्वम् । क्षारत्वम् । तिक्तत्वम् । वातकफनाशित्वम्। विदाहित्वम् । पित्तमलवन्धमूत्रसंशोषकारित्वञ्च। इति राज-निर्घण्ट ॥

औष्ट्रक, क्ली, ( उष्ट्राणां समूहः । उष्ट्रस्य विकार अवयवो वा। उष्ट्र+“गोत्रोक्षोष्ट्रोरभ्रेति”। ४।२।३९।वुञ्।) उष्ट्रसमूह । इत्यमर ॥ उटेर पाल इति भाषा। ( उष्ट्रदुग्धार्थे यथा ॥ वाभटे सूत्रस्थाने । ५ अ ॥
“ईषद्रूक्षोष्णलवणमौष्ट्रक दीपन लघु ।
शस्त वातकफानाहक्रिमिशोफोदरार्शसाम्” ॥)

औष्ण्य, क्ली, (उष्ण+ष्यञ् ।) उष्णस्य भाव । उष्णता ॥ (यथा रघु ।१७।३३।
“पूर्व्वराजवियोगौष्ण्य कृत्स्नस्य जगतो हृतम्”॥)

## अं

अ अकार । स तु अनुस्वार । तन्त्रमते पञ्चदश-स्वरवर्ण ।(स तु पाणिन्यादिमते अयोगवाह एव “अयोगवाहा विज्ञेया आश्रयस्थानभागिन” । इत्युक्ते । नहि योगः अक्षरसमाम्नायसूत्रेषु येषा ते अयोगास्तथापि वाहयन्ति णत्वषत्वकार्य्यं नि-र्व्वाहयन्तीति वाहा अयोगाश्च ते वाहाश्चेति अयोगवाहा अनुस्वारविसर्गजिह्वामूलीयोपध्मा-नीया इत्यर्थ ।)
विन्दुमात्रानुनासिकवर्णोऽयं अकार उच्चारणार्थ । वोपदेवेनास्य नुरिति सञ्ज्ञा कृता। स तु नकार-मकारस्थानेऽपि भवति ॥ * ॥
“नुवीपूर्व्वेण समद्धौ मूर्ध्नौ तु परगामिनौ ।
चत्वारोऽयोगवाहाख्या णत्वकर्म्मण्यणो मता” ॥
इति दुर्गादास ॥ * ॥
“अंकारं विन्दुसंयुक्तं पीतविद्युत्समप्रभम् ।
पञ्चप्राणात्मकं वर्णं ब्रह्मादिदेवतामयम् ॥
सर्व्वज्ञानमयं वर्णं विन्दुत्रयसमन्वितम्” ॥
इति कामधेनुतन्त्रम् ॥ (वङ्गीयभाषायाम् ।) तस्य लेखनप्रकारो यथा ।
“अकाररूपशीर्षे तु दक्षिणे विन्दुरूपिणी ।
ब्रह्मा विष्णुश्च रुद्रश्च क्रमशस्तासु तिष्ठति ॥
या तु विन्दुमयी रेखा सैवाद्या शक्तिरीरिता” ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ अस्य नामानि यथा ।
“अंकारश्चक्षुषो दन्तो घटिका समगुह्यक ।
प्रद्युम्न श्रीमुखी प्रीतिर्वीजयोनिर्नृमध्वज ॥
पर शशी प्रमाणेश सोमविन्दुः कलानिधि ।
अक्रूरश्चेतना नादपूर्णा दु खहर शिव ॥
शिव शम्भुर्नरेशश्च सुखदु खप्रवर्त्तक ।
पूर्णिमा रेवती शुद्ध कन्याचरवियद्रवि ॥
अमृताकर्षिणी शून्यं विचित्रा व्योमरूपिणी ।
केदारो रात्रिनाशश्च कुब्जिका चैव वुद्वुद” ॥
इति तन्त्रशास्त्रम् ॥

अ, क्ली, पर ब्रह्म । इत्येकाक्षरकोष ॥ (महेश्वर । यदुक्तम् महाभारते १३।१७।१२६ ।
“विन्दुविसर्ग सुमुख शर सर्व्वायुध सह” ॥)

---

## अः

अ अ कार स च विसर्ग । द्विविन्दुमात्रकण्ठ्यवर्णा-ऽयं अकार उच्चारणार्थ । तन्त्रमते स च षोडश-स्वरवर्ण ।(पाणिन्यादिमते अयं अयोगवाह एव । अयोगवाहस्य व्युत्पत्तिस्तु अनुस्वारशब्दे द्रष्टव्या ।) वोपदेवेनास्य विरिति सञ्ज्ञा कृता। स तु सका-ररकारयोः स्थानेऽपि भवति ॥ * ॥
“अ कार परमेशानि! विसर्गसहित सदा ।
अ कार परमेशानि! रक्तविद्युत्प्रभामयम् ॥
पञ्चदेवमयो वर्ण पञ्चप्राणमय सदा।
सर्व्वज्ञानमयो वर्ण आत्मादितत्त्वसयुत ॥
विन्दुत्रयमयो वर्ण शक्तित्रयमय सदा।
किशोरवयसा सर्व्वे गीतवाद्यादितत्पराः ॥
शिवस्य युवती एता स्वय कुण्डली मूर्त्तिमान्” ॥
इति कामधेनुतन्त्रम् ॥ (वङ्गीयभाषायां) तस्य लेखनप्रकारो यथा ।
“अकाररूपदक्षे तु द्विविन्दुरथ ऊर्द्धत ।
ब्रह्मेशविष्णवस्तासु मात्रा शक्ति समीरिता ॥
विन्दुद्वयान्विता रेखा सैवाद्या शक्तिरीरिता” ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ अस्य नामानि यथा ।
“अ कण्ठको महासेन कालपूर्णामृता हरि ।
इच्छा भद्रा गणेशश्च रतिर्विद्यामुखी सुखम् ॥
द्विविन्दुरसना सोमोऽनिरुद्धो दु खसूचक ।
द्विजिह्व कुण्डल वक्त्र सर्ग शक्तिर्निशाकर ।
सुन्दरी सुयशानन्ता गणनाथो महेश्वर” ॥
इति तन्त्रशास्त्रम् ॥

अ., पु, महेश्वर । इत्येकाक्षरकोष ॥ (यदुक्तम्,—महाभारते १३। १७।१२६।
“विन्दुर्विसर्गः सुमुख शर सर्व्वायुधः सह” ॥)

---